# Taittirīya-Āraṇyaka

Edited by Subramania Sarma, Chennai

Proofread Version of November 2005

## Chapter 6

[[6-0-0]]
सं त्वा॑ सिञ्चामि॒ यजु॑षा प्र॒जामायु॒र्धनं॑ च॥
ॐ शान्तिः॒ शान्तिः॒ शान्तिः॑॥

[[6-1-1]]
प॒रे॒यु॒वाꣳसं॑ प्र॒वतो॑ म॒हीरनु॑ ब॒हुभ्यः॒ पन्था॑मनपस्पशा॒नम्।
वै॒व॒स्व॒तꣳ सं॒गम॑नं॒ जना॑नां य॒मꣳ राजा॑नꣳ ह॒विषा॑ दुवस्यत।
इ॒दं त्वा॒ वस्त्रं॑ प्रथ॒मं न्वाग॒न्नप॒तदू॑ह॒ यदि॒हाबि॑भः पु॒रा।
इ॒ष्टा॒पू॒र्तमनु॒संप॑श्य॒ दक्षि॑णां॒ यथा॑ ते द॒त्तं ब॑हु॒धा वि ब॑न्धुषु।
इ॒मौ यु॑नज्मि ते॒ वह्नी॒ असु॑नीथाय॒ वो॑ढवे॑।
याभ्यां॑ य॒मस्य॒ साद॑नꣳ सु॒कृतां॒ चापि॑ गच्छतात्।
पू॒षा त्वे॒तश्च्या॑वयतु॒ प्रवि॒द्वानन॑ष्टपशु॒र्भुव॑नस्य गो॒पाः।
स त्वै॒तेभ्यः॒ परि॑ददात्पि॒तृभ्यो॒ऽग्निर्दे॒वेभ्य॑स्सुवि॒दत्रे॑भ्यः।
पू॒षेमा आशा॒ अनु॑वेद॒ सर्वा॒स्सो अ॒स्माꣳ अभ॑यतमेन नेषत्।
स्व॒स्ति॒दा अघृ॑णि॒स्सर्व॑वीरो॒ऽप्र॑युच्छन्पु॒र ए॑तु प्रवि॒द्वान्॥ १॥

[[6-1-2]]
अयु॒र्वि॒श्वायुः॒ परि॑पासति त्वा पू॒षा त्वा॑ पातु॒ प्रप॑थे पु॒रस्ता॑त्।
यत्रास॑ते सु॒कृतो॒ यत्र॒ ते य॒युस्तत्र॑ त्वा दे॒वस्स॑वि॒ता द॑धातु।
भुव॑नस्य पत इ॒दꣳ ह॒विः।
अ॒ग्नये॑ र॒यिम॒ते स्वाहा॑।
पुरु॑षस्य स्याव॒र्यपे॒द्धानि॑ मृज्महे।
यथा॑ नो॒ अत्र॒ नाप॑रः पु॒रा ज॒रस॒ आय॑ति।

पुरुषस्य सयावरि वि तँ प्राणमसिस्रसम्।
शरीरेण महीमिहिं स्वधयेहिं पितृनुप प्रजयाऽस्मानिहावह।
मैवं माऽस्ता प्रियेऽहं देवी सती पितृलोकं यदैषि।
विश्ववारा नभसा संव्ययन्त्यन्त्युभौ नौ लोकौ पयसाऽभ्याववृथ्स्व॥ २॥

[[6-1-3]]
इयं नारी पतिलोकं वृणाना निपद्यत उप त्वा मर्त्य प्रेतँम्।
विश्वं पुराणमनुपालयन्ती तस्यै प्रजां द्रविणं चेह धेहि।
उदीर्ष्व नार्यभि जीवलोकमितासुमेतमुपशेष एहिं।
हस्तग्राभस्य दिधिषोस्त्वमेतत्पत्युर्जनित्वमभि संबभूव।
सुवर्णꣳ हस्तादाददाना मृतस्य श्रियै ब्रह्मणे तेजसे बलाय।
अत्रैव त्वमिह वयꣳसुशेवा विश्वास्स्पृधो अभिमातीर्जयेम।
धनुर्हस्तादाददाना मृतस्य श्रियै क्षत्रायौजसे बलाय।
अत्रैव त्वमिह वयꣳ सुशेवा विश्वास्स्पृधो अभिमातीर्जयेम।
मणिꣳ हस्तादाददाना मृतस्य श्रियै विशे पुष्ट्यै बलाय।
अत्रैव त्वमिह वयꣳ सुशेवा विश्वास्स्पृधो अभिमातीर्जयेम॥ ३॥

[[6-1-4]]
इममग्ने चमसं मा विजीँह्वरः प्रियो देवानामुत सोम्यानाँम्।
एष यश्चमसो देवपानस्तस्मिन्देवा अमृता मादयन्ताम्।
अग्नेर्वर्म परि गोभिर्व्ययस्व संप्रोर्णुष्व मेदसा पीवसा च।
नेत्त्वा धृष्णुर्हरसा जर्हृषाणो दधद्विधक्ष्यन्पर्यङ्खयातै।
मैनमग्ने विदहो माऽभिशोचो माऽस्य त्वचं चिक्षिपो मा शरीरम्।
यदा श्रृतं करवो जातवेदोऽथेमेनं प्रहिणुतात्पितृभ्यः।
श्रृतं यदाऽकरसि जातवेदोऽथेमेनं परिदत्तात्पितृभ्यः।
यदा गच्छात्यसुनीतिमेतामथा देवानाँ वशनीर्भवाति।
सूर्यं ते चक्षुर्गच्छतु वातमात्मा द्यां च गच्छ पृथिवीं च धर्मणा।
अपो वा गच्छ यदि तत्र ते हितमोषधीषु प्रतितिष्ठा शरीरैः।
अजोऽभागस्तपसा तं तपस्व तं ते शोचिस्तपतु तं ते अर्चिः।
यास्ते शिवास्तनुवो जातवेदस्ताभिर्वहेमꣳ सुकृतां यत्र लोकाः।

अयं वै त्वमस्मादधि त्वमेतदयं वै तदस्य योनिरसि।
वैश्वानरः पुत्रः पित्रे लोककृज्जातवेदो वहेमꣳ सुकृतां यत्र लोकाः॥ ४॥
विद्वानभ्याववृथ्स्वाभिमातीर्जयेम शरीरैश्चत्वारि च॥ १॥

[[6-2-1]]
य एतस्य पथो गोप्तारस्तेभ्यस्स्वाहा य एतस्य पथो रक्षितारस्तेभ्यस्स्वाहा य एतस्य पथोऽभिरक्षितारस्तेभ्यस्स्वाहाऽऽख्यात्रे स्वाहाऽपाख्यात्रे स्वाहाऽभिलालपते स्वाहाऽपलालपते स्वाहाऽग्नये कर्मकृते स्वाहा यमत्र नाधीमस्तस्मै स्वाहा।
यस्त इध्मं जभरथ्सिष्विदानो मूर्धानं वा ततपते त्वाया।
दिवो विश्वस्माथ्सीमघायत उरुष्यः।
अस्मात्त्वमधि जातोऽसि त्वदयं जायतां पुनः।
अग्नये वैश्वानराय सुवर्गाय लोकाय स्वाहा॥ ५॥
य एतस्य त्वत्पञ्च॥ २॥

[[6-3-1]]
प्र केतुना बृहता भात्यग्निराविर्विश्वानि वृषभो रोरवीति।
दिवश्चिदन्तादुप मामुदानडपामुपस्थे महिषो ववर्ध।
इदं त एकं पर ऊ त एकं तृतीयेन ज्योतिषा संविशस्व।
संवेशनस्तनुवै चारुरेधि प्रियो देवानां परमे सधस्थे।
नाके सुपर्णमुप यत्पतन्तꣳ हृदा वेनन्तो अभ्यचक्षत त्वा।
हिरण्यपक्षं वरुणस्य दूतं यमस्य योनौ शकुनं भुरण्युम्।
अतिद्रव सारमेयौ श्वानौ चतुरक्षौ शबलौ साधुना पथा।
अथा पितृन्थ्सुविदत्राꣳ अपीहि यमेन ये सधमादं मदन्ति।
यौ ते श्वानौ यम रक्षितारौ चतुरक्षौ पथिरक्षी नृचक्षसा।
ताभ्याꣳ राजन्परिदेह्येनꣳ स्वस्ति चास्मा अनमीवं च धेहि॥ ६॥

[[6-3-2]]
उरुणसावसुतृपावुलुम्बलौ यमस्य दूतौ चरतोऽवशाꣳअनु।
तावस्मभ्यं दृशये सूर्याय पुनर्दत्तावसुमद्येह भद्रम्।
सोम एकेभ्यः पवते घृतमेक उपासते।
येभ्यो मधु प्रधावति ताꣳश्चिदेवापि गच्छतात्।

ये युध्य॑न्ते प्र॒धने॑षु शूरा॑सो॒ ये त॑नु॒त्यजः॑।
ये वा॑ स॒हस्र॑दक्षिणा॒स्ताꣳश्चि॑दे॒वापि॑ गच्छतात्।
तप॑सा॒ ये अ॑नाधृ॒ष्यास्तप॑सा॒ ये सुव॑र्ग॒ताः।
तपो॒ ये च॑क्रि॒रे म॒हत्ताꣳश्चि॑दे॒वापि॑ गच्छतात्।
अश्म॑न्वती रेवती॒स्सꣳर॑भध्व॒मुत्ति॑ष्ठ॒त प्रत॑रता सखायः।
अत्रा॑ जहाम॒ ये अस॒न्नशे॑वाश्शि॒वान्व॒यम॒भि वाजा॒नुत्त॑रेम॥ ७॥

[[6-3-3]]
यद्वै दे॒वस्य॑ सवि॒तुः प्र॒वित्र॑ꣳ स॒हस्र॑धारं॒ वित॑तम॒न्तरि॑क्षे।
येनापु॑ना॒दिन्द्र॒मना॑र्त॒मार्त्यै॒ तेना॒हं माꣳस॒र्वत॑नुं पुनामि।
या रा॒ष्ट्रात्प॒न्नाद॒पय॑न्ति॒ शाखा॑ अ॒भिमृ॑ता नृ॒पति॑मि॒च्छमा॑नाः।
धा॒तुस्तास्सर्वाः॒ पव॑नेन पूताः प्र॒जया॒ऽस्मान्र॒य्या वर्च॑सा॒ सꣳसृ॑जाथ।
उद्व॒यं तम॑स॒स्परि॒ पश्य॑न्तो॒ ज्योति॒रुत्त॑रम्।
दे॒वं दे॑व॒त्रा सूर्य॒मग॑न्म॒ ज्योति॑रुत्त॒मम्।
धा॒ता पु॑नातु सवि॒ता पु॑नातु।
अ॒ग्नेस्तेज॑सा॒ सूर्य॑स्य॒ वर्च॑सा॥ ८॥
धे॒ह्युत्त॑रमा॒ष्टौ च॑॥ ३॥

[[6-4-1]]
यं ते॑ अ॒ग्निमम॑न्थाम वृ॒षभाये॑व॒ पक्त॑वे।
इ॒मं तꣳ श॑मयामसि क्षी॒रेण॒ चोद॒केन॑ च।
यं त्वम॑ग्ने स॒मद॑ह॒स्त्वमु॒ निर्वा॑पया॒ पुनः॑।
क्याम्बूरत्र॑ जायतां पाकदू॒र्वा व्य॑लकशा।
शीति॑के॒ शीति॑कावति॒ ह्लादु॑के॒ ह्लादु॑कावति।
म॒ण्डू॒क्या॒ सुसङ्ग॑मये॒मꣳ स्व॑ग्निꣳ श॒मय॑।
शं ते॑ धन्व॒न्या आप॒श्शमु॑ ते सन्त्वनू॒क्याः॑।
शं ते॑ समु॒द्रिया॒ आप॒श्शमु॑ ते सन्तु॒ वर्ष्याः॑।
शं ते॒ स्रव॑न्तीस्तनु॒वे शमु॑ ते सन्तु॒ कूप्याः॑।
शं ते॑ नीहा॒रो व॑र्षतु॒ शमु॑ पृष्वाऽव॑शीयताम्॥ ९॥

[[6-4-2]]

अवसृज पनरग्ने पितृभ्यो यस्त आहुतश्चरति स्वधाभिः।
आयुर्वसान उपयातु शेषꣳ संगच्छतां तनुवा जातवेदः।
संगच्छस्व पितृभिस्सꣳ स्वधाभिस्समिष्टापूर्तेन परमे व्योमन्न्।
यत्र भूम्यै वृणसे तत्र गच्छ तत्र त्वा देवस्सविता दधातु।
यत्ते कृषणश्शकुन आतुतोद पिपीलस्सर्प उत वा श्वापदः।
अग्निष्टद्विश्वादनृणं कृणोतु सोमश्च यो ब्राह्मणमाविवेश।
उत्तिष्ठातस्तनुवꣳ सम्भरस्व मेह गात्रमवहा मा शरीरम्।
यत्र भूम्यै वृणसे तत्र गच्छ तत्र त्वा देवस्सविता दधातु।
इदं त एकं पर ऊं त एकं तृतीयेन ज्योतिषा संविशस्व।
संवेशनस्तनुवै चारुरेधि प्रियो देवानां परमे सधस्थे।
उत्तिष्ठ प्रेहि प्रद्रवौकः कृणुष्व परमे व्योमन्।
यमेन त्वं यम्या संविदानोत्तमं नाकमधिरोहेमम्।
अश्मन्वती रेवतीर्यद्वै देवस्य सवितुः पवित्रं या राष्ट्रात्पन्नादुद्वयं तमसस्परि धाता पुनातु।
अस्मात्त्वमधिजातोऽस्ययं त्वदधिजायताम्।
अग्नये वैश्वानराय सुवर्गाय लोकाय स्वाहा॥ १०॥
अवशीयताꣳ सधस्थे पञ्च च॥ ४॥

[[6-5-1]]
आयातु देवस्सुमनाभिरूतिभिर्यमो ह वेह प्रयताभिरक्ता।
आसीदताꣳ सुप्रयते ह बर्हिष्यूर्जाय जात्यै मम शत्रुहत्यै।
यमे इव यतमाने यदैतं प्र वां भरन्मानुषा देवयन्तः।
आसीदतꣳ स्वमु लोकं विदाने स्वासस्थे भवतमिन्दवे नः।
यमाय सोमꣳसुनुत यमाय जुहुता हविः।
यमꣳह यज्ञो गच्छत्यग्निदूतो अरंकृतः।
यमाय घृतवद्धविर्जुहोत प्र च तिष्ठत।
स नो देवेष्वायमद्दीर्घमायुः प्रजीवसे।
यमाय मधुमत्तमꣳ राज्ञे हव्यं जुहोतन।
इदं नम ऋषिभ्यः पूर्वजेभ्यः पूर्वेभ्यः पथिकृद्भ्यः॥ ११॥

[[6-5-2]]

योऽस्य॒ कौष्ठ्य॒ जग॑तः॒ पार्थि॑वस्यैक॑ इ॒द्वशी।
य॒मं भ॑ङ्ग्य॒श्रवो॒ गा॑य॒ यो राजा॑ऽनप॒रोध्यः॑।
य॒मं गाय॑ भङ्ग्य॒श्रवो॒ यो राजा॑ऽनप॒रोध्यः॑।
येना॒पो न॒द्यो॑ धन्वा॑नि॒ येन॒ द्यौः पृ॑थि॒वी दृ॒ढा।
हि॒र॒ण्य॒क॒क्ष्यान्थ्सु॒धुरा॑न् हिर॒ण्या॒क्षान॑यश्श॒फान्।
अश्वा॑न॒नश्य॑तो दा॒नं य॒मो रा॑जाऽभि॒तिष्ठ॑ति।
य॒मो दा॑धार पृथि॒वीं य॒मो विश्व॑मि॒दं जग॑त्।
य॒माय॒ सर्व॒मित्र॑स्थे॒ यत्प्रा॒णद्वा॒युर॑क्षि॒तम्।
यथा॒ पञ्च॒ यथा॒ षड्य॒था पञ्च॑द॒र्ष॑यः।
य॒मं यो वि॒द्या॒त्स ब्रू॑या॒द्यथै॑क ऋ॒षिर्वि॑जान॒ते॥ १२॥

[[6-5-3]]
त्रिक॑द्रुके॒भिः पत॑ति॒ षडु॒र्वीरेक॒मिद्बृ॒हत्।
गा॒य॒त्री त्रि॒ष्टुप्छन्दा॑ꣳसि॒ सर्वा॒ ता य॒म आहि॑ता।
अह॑रह॒र्नय॑मानो॒ गामश्वं॒ पुरु॑षं॒ जग॑त्।
वैव॑स्वतो॒ न तृ॑प्यति॒ पञ्च॑भि॒र्मान॑वैर्य॒मः।
वैव॑स्वते॒ विवि॑च्यन्ते॒ य॒मे राज॑नि॒ ते ज॒नाः।
ये चे॒ह स॒त्येने॒च्छन्ते॒ य उ॒ चानृ॑तवादि॒नः।
ते रा॑जन्नि॒ह विवि॑च्यन्ते॒ऽथा यन्ति॒ त्वामुप॑।
दे॒वाꣳश्च॒ ये न॑मस्यन्ति॒ ब्राह्म॑णाꣳश्चाप॒चित्य॑ति।
यस्मि॑न्वृ॒क्षे सु॑पला॒शे दे॒वैस्सं॒पिब॑ते य॒मः।
अत्रा॑ नो वि॒श्पति॑ः पि॒ता पु॑रा॒णा अनु॑वेनति॥ १३॥
प॒थि॒कृद्भ्यो॑ विजान॒तेऽनु॑वेनति॥ ५॥

[[6-6-1]]
वै॒श्वा॒न॒रे ह॒वि॒रि॒दं जु॑होमि साह॒स्रमुत्सꣳ॑शतधा॑रमे॒तम्।
तस्मि॑न्ने॒ष पि॒तरं॑ पिताम॒हं प्रपि॑तामहं बिभ॒रत्पिन्व॑माने।
द्र॒प्सश्च॑स्कन्द पृथि॒वीमनु॒ द्यामि॒मं च॒ योनि॒मनु॒ यश्च पूर्वः॑।
तृ॒तीयं॒ योनि॒मनु॑ सं॒चर॑न्तं द्र॒प्सं जु॑हो॒म्यनु॑ स॒प्त होत्राः॑।
इ॒मꣳ स॑मु॒द्रꣳ श॒तधा॑र॒मुत्सं॑ व्य॒च्यमा॑नं॒ भुव॑नस्य॒ मध्ये॑।

घृतं दुहा॑नामदि॑तिं जना॒याग्ने॒ मा हि॑ꣳसीः पर॒मे व्यो॑मन्न्।
अपे॑त वीत॒ वि च॑ सर्प॒तातो॒ येऽत्र॒ स्थ पु॑रा॒णा ये च॒ नूत॑नाः।
अहो॑भिर॒द्भिर॒क्तुभि॒र्व्यक्तं॒ य॒मो द॑दात्वव॒सान॑मस्मै।
स॒वि॒तैता॑नि॒ शरी॑राणि पृ॒थि॒व्यै मा॒तुरु॒पस्थ॒ आद॑धे।
तेभि॑र्युज्यन्तामघ्नि॒याः॥ १४॥

[[6-6-2]]
शुनं॑ वा॒हाश्शुनं॑ ना॒राश्शुनं॑ कृषतु॒ लाङ्ग॑लम्।
शु॒नं व॑र॒त्रा ब॑ध्यन्ताꣳ शु॒नमष्ट्रा॒मुदि॑ङ्गय॒ शुना॑सीरा शु॒नम॒स्मासु॑ धत्तम्।
शुना॑सीरावि॒मां वाच॑ं यद्दि॒वि च॑क्र॒थुः पय॑ः।
तेने॒मामु॒प॑सिञ्चतम्।
सीते॒ वन्दा॑महे त्वा॒ऽर्वाची॑ सुभगे भव।
यथा॑ नस्सु॒भगा॑ स॒सि॒ यथा॑ नस्सु॒फला॑ स॒सि।
स॒वि॒तैता॑नि॒ शरी॑राणि पृ॒थि॒व्यै मा॒तुरु॒पस्थ॒ आद॑धे।
तेभि॑रदि॒ते॒ शम्भ॑व।
विमु॑च्यध्वमघ्नि॒या दे॑वयाना॒ अता॑रिष्म॒ तम॑सस्पा॒रम॒स्य।
ज्योति॑रापाम॒ सुव॑रगन्म॥ १५॥

[[6-6-3]]
प्र वाता॒ वान्ति॑ प॒तय॑न्ति वि॒द्युत॒ उदोष॑धीर्जिह॒ते पिन्व॑ते॒ सुव॑ः।
इरा॒ विश्व॑स्मै॒ भुव॑नाय जायते॒ यत्प॒र्जन्य॑ः पृ॒थि॒वीꣳ रे॒तसाऽव॑ति।
यथा॑ य॒माय॑ हा॒र्म्यमव॑प॒न्पञ्च॑ मान॒वाः।
ए॒वं व॑पामि हा॒र्म्यं यथाऽसा॑म जीवलो॒के भूर॑यः।
चित॑स्स्थ परि॒चित॑ ऊर्ध्व॒चित॑श्श्रयध्वं पि॒तरो॑ दे॒वताः॑।
प्र॒जाप॑तिर्व॒स्सादयतु॒ तया॑ दे॒वत॑या।
आप्या॑यस्व॒ सं ते॑॥ १६॥
अ॒घ्नि॒या अ॑गन्म स॒प्त च॑॥ ६॥

[[6-7-1]]
उत्ते॑ तभ्नोमि पृथि॒वीं त्वप॒री॒मं लो॒कं नि॒दध॒न्मो अ॒हꣳ रि॑षम्।
ए॒ताꣳ स्थूणां॑ पि॒तरो॑ धारयन्तु॒ तेऽत्रा॑ य॒मस्सा॒द॑नात्ते मिनोतु।

उप॑सर्प मा॒तरं॒ भूमि॑मे॒तामु॑रु॒व्यच॑सं पृथि॒वीꣳ सु॒शेवा॑म्।
ऊर्ण॑म्रदा युव॒तिर्दक्षि॑णावत्ये॒षा त्वा॑ पातु॒ निर्ऋ॑त्या उ॒पस्थे॑।
उच्छ्व॑ञ्चस्व पृथिवि॒ मा विबा॑धिथास्सूपाय॒नाऽस्मै॑ भव सूपवञ्च॒ना।
मा॒ता पु॒त्रं यथा॑ सि॒चाऽभ्ये॑नं भूमि वृणु।
उ॒च्छ्वञ्च॑माना पृथि॒वी हि तिष्ठ॑सि स॒हस्रं॒ मित॒ उप॒ हि श्रय॑न्ताम्।
ते गृ॒हासो॑ मधु॒श्चुतो॒ विश्वाहा॑ऽस्मै शर॒णास्स॒न्त्वत्र॑।
एणी॑र्धा॒ना हरि॑णी॒रर्जु॑नीस्सन्तु धे॒नवः॑।
तिल॑वथ्सा॒ ऊर्ज॑मस्मै॒ दुहा॑ना॒ विश्वाहा॑ स॒न्त्वन॑पस्फुरन्तीः॥ १७॥

[[6-7-2]]
ए॒षा ते॑ यम॒साद॑ने स्व॒धा निधी॑यते गृ॒हे।
अक्षि॑ति॒र्नाम॑ ते अ॒सौ।
इ॒दं पि॒तृभ्यः॒ प्रभ॑रेम ब॒र्हिर्दे॒वेभ्यो॒ जीव॑न्त॒ उत्त॑रं भरेम।
तत्त्व॑मारो॒हासो॒ मेध्यो॒ भव॑ य॒मेन॒ त्वं य॒म्या॑ संवि॒दा॒नः।
मा त्वा॑ वृ॒क्षौ संबा॑धिष्टां॒ मा मा॒ता पृ॑थि॒वि॒ त्वम्।
पि॒तॄन् ह्यत्र॒ गच्छा॒स्येधा॑सं य॒म॒राज्ये॑।
मा त्वा॑ वृ॒क्षौ संबा॑धेथां॒ मा मा॒ता पृ॑थि॒वी म॒ही।
वै॒व॒स्व॒तꣳ हि गच्छा॑सि य॒म॒राज्ये॒ विरा॑जसि।
न॒ळं प्लवमारो॑है॒तं न॒ळेन॑ प॒थोऽन्वि॑हि।
स त्वं॑ न॒ळप्ल॑वो भू॒त्वा॒ संत॑र॒ प्र॒तरोत्त॑र॥ १८॥

[[6-7-3]]
स॒वि॒तैता॑नि॒ शरी॑राणि पृथि॒व्यै मा॒तु॒रु॒पस्थ॒ आद॑धे।
तेभ्यः॑ पृथिवि॒ शम्भ॑व।
षड्ढो॑ता॒ सूर्यं॑ ते॒ चक्षु॒र्गच्छ॑तु॒ वात॑मा॒त्मा द्यां च॒ गच्छ॑ पृथि॒वीं च॒ धर्म॑णा।
अ॒पो वा॑ गच्छ॒ यदि॒ तत्र॑ ते हि॒तमोष॑धीषु॒ प्रति॑तिष्ठा॒ शरी॑रैः।
परं॑ मृत्यो॒ अनु॒परे॑हि॒ पन्थां॒ यस्ते॒ स्व इत॑रो दे॒वयाना॑त्।
चक्षु॑ष्मते शृण्व॒ते ते॑ ब्रवीमि॒ मा नः॑ प्र॒जाꣳ री॑रिषो॒ मोत वी॒रान्।
शं वात॒श्शꣳहि॒ ते॒ घृणि॒श्शमु॑ ते स॒न्त्वोष॑धीः।
कल्प॑न्तां मे॒ दिश॑श्श॒ग्माः।

पृथिव्यास्त्वा लोके सादयाम्यमुष्य शर्मासि पितरो देवाता।
प्रजापतिस्त्वा सादयतु तया देवतया।
अन्तरिक्षस्य त्वा दिवस्त्वा दिशां त्वा नाकस्य त्वा पृष्ठे ब्रध्नस्य त्वा विष्टपे सादयाम्यमुष्य शर्मासि पितरो देवता।
प्रजापतिस्त्वा सादयतु तया देवतया॥ १९॥
अनपस्फुरन्तीरुत्तर देवतया द्वे च॥ ७॥

[[6-8-1]]
अपूपवान्घृतवाꣳश्चरुरेह सीदतूत्तभ्नुवन्पृथिवीं द्यामुतोपरि।
योनिकृतः पथिकृतस्सपर्यत ये देवाना घृतभागा इह स्थ।
एषा ते यमसादने स्वधा निधीयते गृहेऽसौ।
दशाक्षरा ताꣳ रक्षस्व तां गोपायस्व तां ते परिददामि तस्या त्वा मा दभन्पितरो देवता।
प्रजापतिस्त्वा सादयतु तया देवतया।
अपूपवाञ्छृतवान्क्षीरवान्दधिवान्मधुमाꣳश्चरुरेह सीदतूत्तभ्नुवन्पृथिवीं द्यामुतोपरि।
योनिकृतः पथिकृतस्सपर्यत ये देवानाꣳ शृतभागाः क्षीरभागा दधिभागा मधुभागा इह स्थ।
एषा ते यमसादने स्वधा निधीयते गृहेऽसौ।
शताक्षरा सहस्राक्षराऽयुताक्षराऽच्युताक्षरा ताꣳ रक्षस्व तां गोपायस्व तां ते परिददामि तस्या त्वामादभन्पितरो देवता।
प्रजापतिस्त्वा सादयतु तया देवतया॥ २०॥
अपूपवानसौ दश॥ ८॥

[[6-9-1]]
एतास्ते स्वधा अमृताः करोमि यास्ते धानाः परिकिराम्यत्र।
तास्ते यमः पितृभिस्संविदानोऽत्र धेनूः कामदुघाः करोतु।
त्वामर्जुनौषधीनां पयो ब्रह्माण इद्विदुः।
तासा त्वा मध्यादाददे चरुभ्यो अपिधातवे।
दूर्वाणाꣳ स्तम्बमाहरैतां प्रियतमां मम।
इमां दिशं मनुष्याणां भूयिष्ठाऽनु विरोहतु।
काशानाꣳ स्तम्बमाहर रक्षसामपहत्यै।
य एतस्यै दिशः पराभवन्नघायवो यथा ते नाभवान्पुनः।

द॒र्भाणा॑ꣳ स्त॒म्बमाह॑र पितृ॒णामोष॑धीं प्रि॒याम्।
अन्व॑स्यै मू॒लं जी॒वा॒द॒नु का॒ण्ड॒मथो॑ फ॒लम्॥ २१॥

[[6-9-2]]
लो॒कं पृ॑ण ता अ॒स्य सू॒र्द॑दोहसः।
शं वात॒श्शꣳ हि॒ते घृ॒णि॒श्शमु॑ ते स॒न्त्वोष॑धीः।
कल्प॑न्तां ते॒ दि॒श॒स्सर्वाः॑।
इ॒दमे॒व मे॒तोऽप॑रा॒मार्ति॒मारा॒म कां॒चन।
तथा॒ तद॒श्विभ्यां॑ कृ॒तं मि॒त्रेण॒ वरु॑णेन च।
व॒र॒णो वा॑रयादि॒दं दे॒वो व॒न॒स्पतिः॑।
आर्त्यै॑ निर्ऋ॑त्यै द्वे॒षाच्च॑ व॒न॒स्पतिः॑।
विधृ॑तिरसि॒ विधा॑रया॒स्मद॒घा द्वे॒षाꣳ॑सि श॒मि श॒मया॒स्मद॒घा द्वे॒षाꣳ॑सि य॒व य॒वया॒स्मद॒घा द्वे॒षाꣳ॑सि।
पृ॒थि॒वीं ग॑च्छा॒न्तरि॑क्षं गच्छ॒ दिवं॑ गच्छ॒ दिशो॑ गच्छ॒ सु॒वर्ग॑च्छ॒ सु॒वर्ग॑च्छ॒ दिशो॑ गच्छ॒ दिवं॑ गच्छा॒न्तरि॑क्षं गच्छ पृ॒थि॒वीं ग॑च्छा॒पो वा॑ गच्छ॒ यदि॒ तत्र॑ ते हि॒तमोष॑धीषु॒ प्रति॑तिष्ठा॒ शरी॑रैः।
अश्म॑न्वती रेव॒ती॒र्यद्वै॑ दे॒वस्य॑ स॒वि॒तुः प॒वि॒त्रं या रा॒ष्ट्रात्प॒न्नादु॒द्वयं तम॑स॒स्परि॑ धा॒ता पु॑नातु॥ २२॥
फ॒लं पुनातु॥ ९॥

[[6-10-1]]
आरो॑ह॒ताऽऽयु॒र्ज॒रसं॑ गृणा॒ना अ॑नुपू॒र्वं यत॑माना॒ यति॒ष्ट।
इ॒ह त्वष्टा॑ सु॒जनि॑मा सु॒रत्नो॑ दी॒र्घमायुः॑ करतु जी॒वसे॑ वः।
यथाऽहा॑न्यनुपू॒र्वं भव॑न्ति॒ यथ॒र्तव॑ ऋ॒तुभि॒र्यन्ति॑ क्लृप्ताः।
यथा॒ न पूर्व॒मप॑रो॒ जहा॑त्ये॒वा धा॑त॒रायूꣳ॑षि कल्पयै॒षाम्।
न हि॑ ते अग्ने॒ त॒नुवै॑ क्रू॒रं च॒कार॒ मर्त्यः॑।
क॒पिर्ब॑भस्ति॒ तेज॑नं॒ पुन॑र्ज॒रायु॒ गौरि॑व।
अप॑ न॒श्शोशु॑च॒द॒घमग्ने॑ शुशु॒ग्ध्या र॒यिम्।
अप॑ न॒श्शोशु॑च॒द॒घं मृ॒त्यवे॒ स्वाहा॑।
अ॒न॒ड्वाह॒मन्वार॑भामहे स्व॒स्तये॑।
स न॒ इन्द्र॑ इव दे॒वेभ्यो॒ वह्नि॑स्सं॒पार॑णो भव॥ २३॥

[[6-10-2]]
इ॒मे जी॒वा वि॑ मृ॒तैराव॑वर्ति॒न्नभू॑द्भद्रा दे॒वहू॑तिं नो अ॒द्य।

प्राञ्चोऽगामा नृतये हसाय द्राघीय आयुः प्रतरां दधानाः।
मृत्योः पदं योपयन्तो यदैम द्राघीय आयुः प्रतरां दधानाः।
आप्यायमानाः प्रजया धनेन शुद्धाः पूता भवथ यज्ञियासः।
इमं जीवेभ्यः परिधिं दधामि मा नोऽनु गादपरो अर्धमेतम्।
शतं जीवन्तु शरदः पुरूचीस्तिरो मृत्युं दद्महे पर्वतेन।
इमा नारीरविधवास्सुपत्नीराञ्जनेन सर्पिषा संमृशन्ताम्।
अनश्रवो अनमीवास्सुशेवा आरोहन्तु जनयो योनिमग्रे।
यदाञ्जनं त्रैककुदं जातꣳ हिमवतस्परि।
तेनामृतस्य मूलेनारातीर्जम्भयामसि।
यथा त्वमुद्भिनथ्स्योषधे पृथिव्या अधि।
एवमिम उद्भिन्दन्तु कीर्त्या यशसा ब्रह्मवर्चसेन।
अजोऽस्यजास्मदघा द्वेषाꣳसि यवोऽसि यवयास्मदघा द्वेषाꣳसि॥ २४॥
भव जम्भयामसि त्रीणि च॥ १०॥

[[6-11-1]]
अप नश्शोशुचदघमग्ने शुशुग्ध्या रयिम्।
अप नश्शोशुचदघम्।
सुक्षेत्रिया सुगातुया वसूया च यजामहे।
अप नश्शोशुचदघम्।
प्र यद्भन्दिष्ठ एषां प्रास्माकासश्च सूरयः।
अप नश्शोशुचदघम्।
प्र यदग्नेस्सहस्वतो विश्वतो यन्ति सूरयः।
अप नश्शोशुचदघम्।
प्र यत्ते अग्ने सूरयो जायेमहि प्र ते वयम्।
अप नश्शोशुचदघम्॥ २५॥

[[6-11-2]]
त्वꣳ हि विश्वतोमुख विश्वतः परिभूरसि।
अप नश्शोशुचदघम्।
द्विषो नो विश्वतो मुखाऽति नावेव पारय।

अप॑ न॒श्शोशु॑चद॒घम्।
स न॒स्सिन्धु॑मिव ना॒वयाऽति॑पर्षा स्व॒स्तये᳚।
अप॑ न॒श्शोशु॑चद॒घम्।
आप॑ः प्रव॒णादि॑व य॒तीरपा॒स्मथ्स्य॑न्दताम॒घम्।
अप॑ न॒श्शोशु॑चद॒घम्।
उ॒द्व॒नादु॑द॒कानी॒वापा॒स्मथ्स्य॑न्दताम॒घम्।
अप॑ न॒श्शोशु॑चद॒घम्।
आ॒नन्दा॑य प्रमो॒दा॒य पु॒नरागा॒ꣳ स्वान्गृ॒हान्।
अप॑ न॒श्शोशु॑चद॒घम्।
न वै तत्र॒ प्रमी॑यते॒ गौरश्व॑ः पुरु॑षः प॒शुः।
यत्रे॒दं ब्रह्म॑ क्रि॒यते॑ परि॒धिर्जीव॑नाय॒ कमप॑ न॒श्शोशु॑चद॒घम्॥ २६॥
अ॒घम॒घं च॒त्वारि॑ च॥ ११॥

[[6-12-1]]
अप॑श्याम युव॒तिमा॒चर॑न्तीं मृ॒ताय॑ जी॒वां परि॑णी॒यमा॑नाम्।
अ॒न्धेन॒ या तम॑सा॒ प्रावृ॑ताऽसि॒ प्राची॒मवा॑ची॒मव॒यन्नरि॑ष्ट्यै।
मयै॒तां मा॒ꣳस्तां भ्रि॒यमा॑णा दे॒वी स॒ती पि॑तृलो॒कं यदैषि॑।
वि॒श्ववा॑रा॒ नभ॑सा॒ संव्य॑यन्त्यु॒भौ नो॑ लो॒कौ पय॒साऽऽवृ॑णीहि।
र॒यि॒ष्ठाम॒ग्निं मधु॑मन्तमू॒र्मिण॒मूर्ज॒ꣳस्सन्तं॑ त्वा॒ पय॒सोप॒सꣳस॑देम।
सꣳ र॒य्या समु॒ वर्च॑सा॒ सच॑स्वा न॒स्स्व॒स्तये᳚।
ये जी॒वा ये च॑ मृ॒ता ये जा॒ता ये च॒ जन्त्या᳚ः।
तेभ्यो॑ घृ॒तस्य॑ धारयि॒तुं मधु॑धारा व्यु॒न्द॒ती।
मा॒ता रु॒द्राणा᳚ं दुहि॒ता वसू॑ना॒ꣳ स्वसा॑ऽऽदि॒त्याना॑मम॒तस्य॒ नाभि॑ः।
प्र णु॒ वोच॑ं चिकि॒तुषे॒ जना॑य॒ मा गामना॑गा॒मदि॑तिं वधिष्ट।
पिब॑तूद॒कं तृणा᳚न्यत्तु।
ओमुथ्सृ॒जत॥ २७॥
व॒धि॒ष्ट द्वे च॑॥ १२॥

परे॒ युवा॒ꣳसं॒ प्रवि॒द्वान्भुव॑नस्या॒भ्याव॑वृथ्स्वा॒जो भा॒गो॑ऽयं वै चतु॑श्चत्वारि॑ꣳश॒त्।
य ए॒तस्य॒ त्वत्पश्च॑।

प्र केतुनेदं ते नाके सुपर्णमपीहि यौ ते ये युध्यन्ते तपसाऽश्मन्वती रेवतीस्सꣳ रभध्वꣳ सहस्रधारमष्टाविꣳशतिः।
यं ते यत्त उत्तिष्ठात इदं त उत्तिष्ठ प्रेह्यश्मन्यद्वा उद्वयमयं पञ्चविꣳशतिः।
आयातु त्रिꣳशत्।
वैश्वानरे तस्मिन्द्रप्स इममपेताहोभिर्युज्यन्तामग्निया अदिते पारं व आप्यायस्व सप्तविꣳशतिः।
उत्ते गृहेऽक्षितिस्तेभ्यः पृथिवि षड्ढोता परं मे शग्माः पृथिव्या अन्तरिक्षस्य द्वात्रिꣳशत्।
अपूपवानसौ दश शतं दश।
एतास्ते ते दिशस्सर्वा इदमश्मन्विꣳशतिः।
आरोहत तनुवै क्रूरं चकार पुनर्मृत्यवे मा नोऽनु गाद्ब्रह इमा नारीः परि त्रयोविꣳशतिः।
अप नस्सुक्षेत्रिया प्र यद्भन्दिष्ठः प्रयदग्नेः प्र यत्ते अग्ने त्वꣳहि द्विषस्स नस्सिन्धुमापः प्रवणादुद्वनादानन्दाय न वै तत्र चतुर्विꣳशतिः।
अपश्यामाऽऽवृणीहि द्वादश द्वादश॥ १२॥

परे युवाꣳसमायात्वेतास्ते सप्तविꣳशतिः॥ २७॥

परेयुवाꣳसमोमुथ्सृजत्॥

[[6-0-0]]
सं त्वा सिञ्चामि यजुषा प्रजामायुर्धनं च॥
ॐ शान्तिः शान्तिः शान्तिः॥